బి)1.**"కుశో దర్భస్తథా బర్హిః సూచ్యగ్రో యత్ర భూషణః।**
**తతోఽన్యో దీర్ఘపత్రః స్యాత్ క్షురపత్రస్తథైవ చ॥"**

2. పూజాకాలే సర్వదైవ కుశహస్తో భవేచ్ఛుచిః।
తర్జన్యా రజతం ధార్యం స్వర్ణం ధార్యమనామయా॥

3. కుశకార్యకరం యస్మాన్న తు వన్యాః కుశాః కుశాః।
కుశేన రహితా పూజా విఫలా కథితా మయా॥
నాన్యస్య రజతం స్వర్ణం ధార్యం హి నిజమఙ్గలే
- ఇతి వరదాతన్త్రే - ।పటలః।

సి) శ్లో॥ ...బర్హిర్దర్భః కుథః **కుశః** - 191
- అని హలాయుధకోశము '4' నామములను పేర్కొన్నది.

డి) ముఞ్జాలాభే తు కర్తవ్యాః కుశాశ్మన్తకబల్వజైః।
త్రివృత్తా గ్రన్థినైకేన త్రిభిః పఞ్చభిరేవ వా॥ - మను 2-43

**ఛందస్సు :-** ఇది ఈ సర్గమున చివరిశ్లోకము కనుక వేరే ఛందస్సున కూర్పబడినది. ఇది 'అతిజగతీ' ఛందస్సున **'ప్రహర్షిణీ'** వృత్తమున నిబంధింపబడినది. తల్లక్షణం యథా -

'త్ర్యాశాభిర్మనజరగాః ప్రహర్షణీయమ్' మ, న, జ, ర, గ (3,10)

శ్లో॥ తే రేఖాధ్వజకులిశాతపత్రచిహ్నం
సమ్రాజశ్చరణయుగం ప్రసాదలభ్యమ్।
ప్రస్థానప్రణతిభిరఙ్గులీషు చక్రుః
మౌళిస్రక్చ్యుతమకరన్దరేణుగౌరమ్॥ - ర.వం. 4-88

**క్రియాదర్శము :- నినాయ -**'ణీఞ్ - ప్రాపణే', ఇత్యస్మాద్ధాతోస్సకర్మకాత్ కర్తరి భూతే లిటి పరస్మైపదే ప్రథమపురుషైకవచనాన్తః।

**నినాయ** - నిన్యయః - నిన్యుః

శ్లో॥ విస్రస్తమంసాదపరో విలాసీ
రత్నానువిద్ధాఙ్గదకోటిలగ్నమ్।





ప్రాలమ్బముత్కృష్య యథాప్రవేశం
**నినాయ** సాచీకృతచారువక్త్రః॥ - ర.వం. 6-14

**సంజీవినీ :-** నిర్దిష్టామితి. - స రాజా, కులపతినా మునికులేశ్వరేణ వసిష్ఠేన, నిర్దిష్టాం పర్ణశాలామ్ - అధ్యాస్య అధిష్ఠాయ - తస్యా మధిష్ఠానం కృత్వేత్యర్థః' అధి శీఙ్ స్థాసాం కర్మే' త్యనేన ఆధారస్య కర్మత్వే ద్వితీయా, ప్రయతో నియతః - పరిగ్రహః పత్నీ - ద్వితీయా యస్య స తథోక్తః, కుశానాం శయనే, సంవిష్టః సుప్తః సన్, తస్య వసిష్ఠస్య - శిష్యాణామ్ - అధ్యయనేన అపరరాత్రవేదపఠనేన - నివేదితః అవసానో యస్యాస్తాం, నిశాం, నినాయ గమయామాస; అపర రాత్రాధ్యయనే మనుః. 'స నిశాన్తే పరిశ్రాన్తో బ్రహ్మాధీత్య పునః స్వపేత్' - గౌతమ శ్చ. 'స చాప్యపరరా త్రాదా వధీ త్యపి పునః స్వపే ది' తి. ప్రహర్షిణీవృత్తమేతత్, ఉక్తం చ. మ్నౌజ్రౌగ స్త్రిదశయతిః ప్రహర్షిణీయమితి.

---

ఈ రఘువంశమహాకావ్యప్రథమసర్గకు నాచే చేయబడిన 'మృణాళినీ' వ్యాఖ్యానము 14-6-2013 ఉదయం గం. 8-42ని.లకు ప్రారంభింపబడి, 7-7-2013న సాయంసమయమున గం. 5-12ని.లకు పూర్తికావింపబడినది.

ఇతి రావిమోహనరాయరచితాయాం మృణాళినీసమాఖ్యాయాం
రఘువంశవ్యాఖ్యాయాం ప్రథమస్సర్గః।
శ్రీః

శ్రీః

ఆనందదేవాయనివల్లభదేవవిరచితటీకాసహితః

# రఘువంశః

## ప్రథమః సర్గః

**यस्य भृङ्गावलिः कण्ठे दानाम्भोराजिराजिते ।**
**भाति रुद्राक्षमालेव स नः पायाद्गणाधिपः ।। १ ।।**

**कालिदासोक्तयः कुत्र व्याख्यातारो वयं क्व च ।**
**तदिदं मन्ददीपेन नाट्यवेश्मप्रकाशनम् ।। २ ।।**

**तथापि क्रियते ऽस्माभिः पञ्चिका रघुवर्णने ।**
**टीकाविरहखेदार्तसाधुसार्थदुरवर्तितैः ।। ३ ।।**

इह सकलव्यापारप्रवृत्ताविष्टदेवतासंस्तवनमभिमतसिद्धिहेतुः किमुत त्रिवर्गयशोनिदानस्य काव्यस्य रचनायामिति चेतसि कृत्वाह --

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।** **२**

पितरौ माता च पिता च तावित्येकशेषः। वागर्थौ शब्दाभिधेयौ वाच्यवाचकाविव सम्पृक्तावेकीभूतौ । यदुक्तम् -

**द्विधा कृत्वात्मनो देहमर्धेन पुरुषो ऽभवत् ।**
**अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ।।** इति ।

**एकीभूतावन्योन्यमव्यभिचारात् ।**
**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सम्बन्धे योग्यता तथा ।।**





**शब्दः कारणमर्थस्य स हि तेनोपपाद्यते ।**
**तथा हि बुद्धिविषयाच्छब्दादर्थः प्रतीयते ।।**

किमर्थम्। शब्दार्थयोः परिज्ञानाय। तत्तत्त्वपरिज्ञानात्किल पुरुषार्थावाप्तिः। सा च तदभिनत्या सुलभा। काव्योपयोग्यलङ्कारविषयवागर्थ प्रतिपत्तये इत्यर्थः।

**पतिता गुरवस्त्याज्या न तु माता कदाचन ।**
**गर्भधारणपोषाभ्यां येन माता गरीयसी ।।**

इति मातुरभ्यर्हितत्वात्पार्वत्याः पूर्वनिपातः ।। १ ।।

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ।।** **२**

समुद्रं तर्तुकामः काण्डप्लवेन। यथा काण्डप्लवेनोदधितरणं दुःसहमेवमस्मदीयया धिया सूर्यवंशवर्णनमित्यर्थः। सूर्यः प्रभव उत्पत्तिस्थानं यस्य वंशस्य कुलस्य स तथोक्तः । अल्पविषया किञ्चिज्ज्ञा मतिर्बुद्धिः। क्वेत्यसम्भावनायाम्। दुस्तरं दुर्लङ्घम् । मोहादज्ञानात् ।। २ ।।

**मन्दः कवियशःप्रार्थी गमिष्याम्यवहास्यताम् ।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ।।** **३**

अहं नूनमुपहास्यतां गमिष्यामि । यतो मन्दबुद्धिः सन् कवीनां सुबन्ध्वादीनां सम्बन्धियशःप्रार्थी कीर्त्यर्थी । उन्नतपुरुषप्राप्ये ऊर्ध्वबाहुः खर्वो भूस्थो यथा लोकेनोपहस्यते ।। ३ ।।

यद्येवं तन्मूक एवास्स्वेत्याह -

**अथवा कृतवाग्द्वारे वंशे ऽस्मिन्पूर्वसूरिभिः ।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ।।** **४**

अथवेत्युपायस्मरणे पक्षान्तरे । ममोपायो वर्णयितुं प्रसरो विद्यते । यतो व्यासवाल्मीकिप्रभृतिभिः कविभिः कृतं वाचां द्वारं प्रवेशोपायो यस्य तस्मिन्। रत्ने हीरकोपलेन विद्धे सूत्रस्य यथा प्रवेशो विद्यते ।। ४ ।।

कथं कथान्तराण्युत्सृज्यात्रादर इत्याह -

**सो ऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ।। ५**

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम् ।। ६**

**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ।। ७**

**शैशवे ऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ।। ८**

**रघूणामन्वयं वक्ष्ये तनुवाग्विभवो ऽपि सन् ।**
**तद्गुणैः कर्णमागत्य चापलाय प्रतारितः ।। ९**

कुलकम् ।। यस्य मे तद्वर्णन एवंविधा गतिरुपायो ऽस्ति सो ऽहं रघूणामन्वयं वक्ष्य इति समन्वयः। अल्पभारतीप्रपञ्चोऽपि भवन् । तेषां रघूणां गुणैरौदार्यादिभिः कर्णमागत्य चापलाय वर्णनाय प्रेरितो नियुक्तः। आजन्मशुद्धानां जन्मनः प्रभृत्यदोषाणाम् । तत्र त्रिविधा शुद्धिः। जन्मशुद्धिरुदात्तकुलद्वयप्रसवेन । विद्याशुद्धिरागमात्सर्वशास्त्रावगमेन । कर्मशुद्धिरागमोक्ताचारचरणं निषिद्धवर्जनं च । आफलोदयकर्मणां फलोदयपर्यन्तं कर्म येषाम् । अनेन मन्त्रज्ञतापि प्रतिपादिता । यदुक्तम् । 'कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देश-

135



कालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः'। आसमुद्रक्षितीशानां न तु मण्डलमात्रेश्वराणाम् । नाकः स्वर्गः। वर्त्म मार्गः। अनेन चक्रवर्तिताकथनम्। यथाविधि शास्त्रोक्तविधानेन हुता गार्हस्पत्याहवनीयदक्षिणाग्नयो यैस्तेषामित्याहिताग्नित्वोक्तिः। इच्छापूरणपर्यन्तं पूजिता अर्थिनो यैस्तेषामित्यौदार्योक्तिः। अपराधानुसारेण दण्डो दमनं येषाम् । कर्मस्ववस रजागरूकाणां ब्राह्ममुहूर्तोत्थायिनां वा। त्यागाय दानाय न तु भोगार्थं सञ्चितानि धनानि यैस्तेषां । सत्यं रक्षितुं न त्वशक्त्याल्पं वदन्ति ये तेषाम्। यशोर्थं जेतुमिच्छूनां न तु लोभेन वैरेण वा । उक्तं च । सम्पन्नस्तु प्रकृतिभिः। इत्यादि । अथवा । उत्साहमन्त्रप्रभुशक्तियुक्त इति । स च त्रिधा । धर्मविजयी लोभविजय्यासुरविजयी चेति। सन्ततये न रागाद्दारैः सङ्गच्छन्ते ये तेषाम् । पितृणनिवारणार्थं गृहस्थानाम्। बाल्ये ऽभ्यस्ताश्चतस्र आन्वीक्षिकीत्रयीवार्त्तादण्डनीतयो विद्या यैस्तेषाम् । तारुण्य इन्द्रियार्थकामानामुपभोगवताम्। स्थविरभावे वानप्रस्थानाम् । समाधिना पर्यन्ते उत्सृष्टदेहानाम् ।। ५-९ ।।

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ।। १०**

साधवो ऽन्वयमाकर्णयितुं योग्या भवन्ति न त्वन्ये । यतः शोभनाशोभनयोः प्रकाशकारणभूताः । यस्मात्सुवर्णस्य नैर्मल्यमौज्ज्वल्यं मलश्च वह्नौ जनेन दृश्यते, न तु जलादिके । इह च वंशक्रमो हरिवंशपुराणाश्रितो न तु रामायणाश्रितः ।। १० ।।

तमेव वंशं वर्णयितुमाह -

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ।। ११**

मनुः प्रसिद्धो रविजो भूमिं क्षियन्ति पालनार्थं निवसन्तीति राजानस्तेषां प्रथमो बभूव । बुद्धिमतां पूज्यः । यथा वेदानां पूर्व ओङ्कारो ऽभूत् । सो ऽपि बुद्धिमतां पूज्यः ॥ ११ ॥

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२**

मनुकुल इक्ष्वाकुककुत्स्थसगरादिजनिते दिलीप इति नृपचन्द्रो ऽजनि। शुद्धयः पूर्वोक्ताः सन्ति यत्र स तस्मिन् । अतिशुद्धः। समुद्रे यथा चन्द्रोऽजनि॥१२॥

**व्यूढोरस्को वृषस्कन्धः सालप्रांशुर्महाभुजः ।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ १३**

विशालं मांसलं वक्षो यस्य सः। उक्षण इवांसौ यस्य सः। पीवरांसः। वृक्षवदुन्नतः। अथवा सालाख्यो वृक्षः। आजानुबाहुः। क्षत्रियाणां सम्बन्ध्याचारो देवताविशेषो वा स्वव्यापारे युक्तं प्रजानियमनादिके शक्तं शरीरमाश्रितः। मूर्त इवेत्यर्थः ॥ १३ ॥

**सर्वातिरिक्तसारेण सर्वतेजोभिभाविना ।**
**स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ १४**

आत्मना देहेन भूमिमाक्रम्य स्थितः। सर्वेभ्यो ऽधिक उत्कर्षो बलं वा यस्य।

**अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्यये ऽप्यसहनं तत्तेजः समुदाहृतम् ॥**

सर्वेषां तेजो दीप्तिं वा तिरस्करोति यः। सर्वेणां मध्य उच्चो महाप्राणश्च। यथा मेरुशैलो भुवमवष्टभ्यात्मना स्थितः। अत्र पक्षे सारो दार्ढ्यं तेजोभि-भावित्वं सौवर्णत्वात् । तेजांसि ज्योतींषि वा तेषामधःकृतत्वात् ॥ १४ ॥





**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।**
**आगमैः सदृशारम्भः प्रारम्भसदृशोदयः ॥ १५**

आकृत्यानुरूपा योग्या धीर्यस्य । धियानुरूपं श्रुतं यस्य । श्रुतैरनुरूपः कर्मारम्भो यस्य। व्यापारारम्भेणानुरूपा प्रवृत्तिजनितार्थस्योत्पत्तिर्यस्य। इति प्रज्ञादीनामुत्कर्ष उक्तः। आकृतेस्तु व्यूढोरस्क इत्यादिना ॥ १५ ॥

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।**
**अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ १६**

स चण्डत्वादिभी राजगुणैरनभिभाव्य आसीत् । वदन्यत्वादिभिस्तु सेव्यः। नृपाणां गुणाः षट्त्रिंशत् । यथाब्धिः पोतवणिजां भयानकैर्जलजन्तुभिरनभि-भवनीयो भवति, कमनीयै रत्नैस्तु सेव्यः ॥ १६ ॥

**रेखामात्रमपि क्षुण्णादात्मनो वर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ १७**

दिलीपस्य वर्णाश्रमरूपाः प्रजाः सततसेवितात्स्वजातिविहितान्मार्गादन्यदीयं मार्गं नातिचक्रमुः। दण्डधारकस्योत्पथप्रस्थितानां निगृहीतुः। चक्रधारातुल्याः। ता हि प्रहतान्मार्गात्परं मार्गं वालाग्रमपि नातिक्रामन्ति ॥ १७ ॥

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८**

स राजा प्रजाभ्यः करं दण्डं जग्राह तासामेवोद्भवाय वर्धनाय वा शान्ति-कर्मोपयोगित्वाद्दुर्भिक्षसङ्कटे प्रतिपादनाच्च । यदुक्तम् --

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥**

इति । यस्मात्सूर्यो ऽनेकगुणं जलं त्यक्तुं वर्षासु गृह्णाति ग्रीष्मे ॥ १८ ॥

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रे च व्यापृता बुद्धिर्मौर्वी धनुषि चातता ॥ १९**

तस्य राज्ञः पृतना परिवार ऐश्वर्यशोभोपकरणमभूत् । बुद्धिर्ज्या चेत्युभयं तु प्रयोजनसम्पादकम् । शास्त्र उद्युक्ता धीर्गुणश्चापे प्रसारितः ॥ १९

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २०**

तस्य यात्रादयो व्यापारप्रवृत्तयः कार्यसिद्ध्यानुमीयन्ते स्म, न तु क्रियमाणा ज्ञायन्ते स्म । यतो गुप्तो गिर्यग्रादौ मन्त्रितत्वान्मन्त्रो यस्य । गुप्तो मुखरागादिकः कायव्यापारो यस्य । शुभाशुभानि कर्माणि यथा जन्मान्तरकृतानीह लोके सुखदुःखाभ्यामनुमीयन्ते ॥ २० ॥

**जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।**
**अगृध्नुराददे सो ऽर्थानसक्तः सुखमन्वभूत् ॥ २१**

सोऽकातर आत्मानं ररक्ष । यत उक्तम् । आपदर्थं धनं रक्ष्यमित्यादि । अनार्तो व्याधिं विना पुण्यमाचारं सिषेवे, तस्य सदा सेव्यत्वात् । यदुक्तम्। आर्ता नरा धर्मपरा भवन्तीति । अलुब्धो ऽर्थाञ्जग्राह । यदुक्तम् । अनादेयं नाददीतेत्यादि । अव्यसनी सुखमनुबभूव । यत उक्तम् । सुखमापतितं सेव्यमित्यादि ॥ २१ ॥

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२**

तस्य राज्ञः पाण्डित्यादयो गुणाः सप्ररोहाः सापत्या इवासन् । यतो गुणा गुणान्तरमनुबध्नन्त्यनुवर्तन्ते तद्भवात् । तथा ह्यस्य ज्ञत्वे सत्यपि मौनं





वाक्संयमः। यदुक्तम् । नापृष्टः कस्यचिद्ब्रूयादित्यादि । समर्थ्येऽपि क्षान्तिः। दानेऽप्यविकत्थनम् । अन्ये किञ्चिज्ज्ञा अपि वाचाटा भवन्ति, ईषच्छक्ता अपि लोकपीडाकारिणः, मनागपि दत्त्वा विकत्थन्ते ॥ २२ ॥

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।**
**तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना ॥ २३**

तस्य वार्द्धकं विस्रंसाया ऋते ऽभूत् । शब्दस्पर्शरूपरसगन्धैरहृतस्य जितेन्द्रियत्वात् । पुराणतर्कमीमांसाधर्मशास्त्राङ्गवेदाख्यानां चतुर्दशानां विद्यानामान्वीक्षिकीत्रयीवार्त्तादण्डनीतीनां वा चतसृणामन्तगस्य। धर्मासक्तस्य। वृद्धश्च विषयैर्नाकृष्यते बहुशास्त्रदर्शी धर्मपरश्च भवति। यत उक्तम् । पूर्वे वयसि यः शान्त इत्यादि । तथा --

न तेन वृद्धो भवति येनास्य पलितं शिरः। इत्यादि ॥ २३ ॥

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४**

स प्रजानां विनीतत्वोत्पादनात्पालनात्पोषणाच्च पिताभूत् । यत उक्तम् । अन्नदाता भयत्रातेत्यादि । प्रजानां पितरो जननस्य कारणभूताः केवलमासन् ॥ २४ ॥

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५**

धर्मार्थकामाः पृथक्स्वरूपाः। तस्य राज्ञस्त्वर्थकामावपि धर्मरूपावेवाभूताम्। दण्डार्हानर्थं दापयतो मर्यादायै, न तु द्वेषलोभाभ्याम् । विवाहं कुर्वतो ऽपत्यार्थम्, न तु रागेण । यतो बुद्धिमतः ॥ २५ ॥

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।**
**सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ।। २६**

द्वौ राजा शक्रश्च द्यावापृथिव्यावन्योन्याधीनसम्पत्परिवर्तनेन धारयांबभूवतुः। तथा हि राजा पृथिवीं धनमक्षारयद्यागार्थम् । तेन हि देवप्रीणनात्स्वर्गः पालितो भवति । शक्रश्च वियज्जलमक्षारयत्सस्यार्थम् । वृष्ट्या चान्नोत्पत्त्या भूः पालिता भवति ।। २६ ।।

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।**
**व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ।। २७**

किलेति सत्यार्थमागमसूचनाय । एतद्राज्ञो दिलीपस्येत्यादि । तस्य राज्ञो ऽन्ये नृपा यशो नानुचक्रुः। यस्मात्तस्करता चौर्यमन्यधनेभ्यो निवृत्ता सती शब्दे कृतास्पदा । परस्वविषयं चौर्यं नासीत्किं तर्हि चौरतस्करादिशब्दविषयम्। परधनं तदा न कश्चन मुमोष । केवलं चौरतस्करादयः शब्दा एव मुषिताः। वाच्याभावाद्वाचकस्यासत्कल्पत्वात् । सति हि परस्वचौर्ये ते प्रवर्तन्ते, तदभावे तु ते ऽप्यस्तमिता इत्यर्थः। केचित्त्वाहुः शब्दमात्र एव। वाच्यरूपस्यात्मनः प्रत्यस्तमये वाचकांश एवावशिष्टो ऽस्याः। तस्करशब्दः परं विद्यत इत्यर्थः।। २७ ।।

**द्वेष्यो ऽपि सम्मतः शिष्टस्तस्यार्तस्य यथौषधम् ।**
**त्याज्यो दुष्टः प्रियो ऽप्यासीदङ्गुष्ठ इवाहिना ।। २८**

तस्य शत्रुरपि सदाचारस्थितः प्रियो ऽभूद्गुणानुरागित्वात् । व्याधिपीडितस्य यथौषधं व्यथकमपि प्रियमस्ति । पुत्रादिरपि दुष्टाचारो हेयोऽभूत् । यथा सर्पेण दष्टो ऽङ्गुष्ठो विषव्याप्तिभयाच्छित्त्वा त्याज्यो ऽस्ति ।। २८ ।।

**तं वेधा विदधे नूनं महाभूतसमाधिना ।**
**तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ।। २९**



नूनमित्यनुमाने । प्रजापतिस्तं नृपं निर्ममे। निश्चितं पृथिव्यादीनि येन चित्तैकाग्र्येण तेनैनमपि । तथा हि तस्य गुणाः श्रुतादयो ऽन्यप्रयोजनमेवैकः प्रवृत्तिजनितो ऽर्थो येषां ते तथाविधा अभवन्। श्रुतेन ह्यसौ नमति धर्मं च कुरुते। शौर्येणान्यान्रक्षति । औदार्येण दरिद्राणां दारिद्र्यं दारयति । पृथिव्यादीनामपि गन्धादयो गुणाः परप्रयोजना एव ।। २९ ।।

**स वेलावप्रवलयां परिखीकृतसागराम् ।**
**अनन्यशासनामुर्वीं शशासैकपुरीमिव ।। ३०**

स राजा समग्रां भुवं पर्यपालयत् । जलधिजलविकृतिर्वेला तदाधारो ऽपि गिरिर्वेला सैव प्राकारमण्डलं यस्याः। खातवलयाः सम्पादिताः समुद्रा यस्यास्ताम् । पुरीपर्यन्ते हि रक्षार्थं वप्रवलयेन खातवलयेन च भाव्यम् । अविद्यमाना परस्य राज्ञ आज्ञा यस्याम्। यथैकनगरी सुखेन रक्ष्यते ।।३०।।

**तस्य दाक्षिण्यरूढेन नाम्ना मागधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ।। ३१**



दिलीपस्य सहधर्मचारिणी भार्या सुदक्षिणेत्यभिधानेनाभूत् । मगधे गौडदेशे राजा मागधस्तत्कुले जाता । आनुकूल्येन कृतस्थितिना । अनेन नाम्नो ऽन्वर्थतोक्ता । यज्ञस्य यथा दक्षिणा । अनेनावियोगः प्राधान्यं चोक्तम्।। ३१।।

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ।। ३२**

भूपतिस्तया विपुलाशयया गौरवौदार्याभिमानादिवासितचित्तवत्या श्रिया च स्वं प्रशस्तदारं बुबुधे । अन्तःपुरे ऽनेकस्मिन्नपि । वसुधाधिप इत्यनेन भुवो ऽपि कलत्रत्वमुक्तम् ।। ३२ ।।

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।**
**विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३**

स मनोराज्यैर्वाञ्छाभिः प्राप्यप्रेप्साभिर्विघ्नितफलैश्चिरकालभाविनिष्पत्तिभिरनेहसमत्यवाहयत् । तस्यां स्वसदृश्यां स्वस्योत्पत्तौ सोत्कण्ठः ।

पतिर्भार्यां सम्प्रविश्य गर्भो भूत्वेह जायते ।

इति स्मृतेः। आत्मा वा पुत्रः। आत्मा वै पुत्रनामासीति श्रुतेः। अनेन पुत्रस्य भावित्वमाह ॥ ३३ ॥

**गङ्गां भगीरथेनेव पूर्वेषां पावनक्षमाम् ।**
**ईप्सता सन्ततिं न्यस्ता तेन मन्त्रिषु कोसला ॥ ३४**

तेनापत्यमभिलषतायोध्यानगरी सहायेषु रक्षणार्थं न्यासीकृता । यथा गङ्गां वाञ्छता भगीरथेन सैव पुरी पुरा सचिवेषु न्यस्ताभूत् । आदिपुरुषाणां पवित्रीकरणसमर्थां सन्ततिं गङ्गां च। कपिलरोषदग्धानां प्रपितामहानां पावनाय भगीरथो गङ्गां स्वर्गाद्भूमिं पातालं चावातारयदित्यागमः ॥ ३४ ॥

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।**
**तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५**

अनन्तरं तौ जायापती सुतेच्छया वसिष्ठाख्यस्य गुरोराश्रमं ययतुः। स्रष्टारं सम्पूज्य सनियमौ ॥ ३५ ॥

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमाश्रितौ ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६**

अरूक्षो मधुरो धीरश्च ध्वनिर्यस्य तमेकमेव रथमारूढौ तौ दम्पती यथा विद्युन्नागौ वर्षाभवं मेघमाश्रयतः। ऐरावतः काद्रवेयो नागः। मेघान्तर्गतौ





किल विद्युन्नागौ भवतः। मेघवाहनत्वान्नागानाम् । केचित्त्वैरावतमिन्द्रचापमाहुः॥ ३६ ॥

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।**
**वशानागौ सगन्धाल्पकलभानुगताविव ॥ ३७**

परिगणिताः स्वल्पे ऽग्रगामिनो ऽनुचरा ययोः वसिष्ठावासबाधा मा भवत्विति हेतुना । यथा हस्तिनी हस्ती च सनाभयः सगोत्रा ज्ञातयो ऽल्पे ये करिपोतकास्तैर्युक्तौ ॥ ३७ ॥

**सेव्यमानौ सुखस्पर्शैः सालनिर्यासगन्धिभिः।**
**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८**

पवनैः कृतसेवौ देहप्रियसंस्पर्शैर्देवदारूणां स्रुत्या रसेन सुगन्धिर्गन्धो येषां तैः कुसुमरजसां क्षेपकैरीषत्कम्पितकाननपङ्क्तिभिः॥ ३८ ॥

**पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ३९**

मनोरथसम्पत्तिसूचकस्य वातस्य पश्चादागतत्वेन हितत्वादश्वोत्खातै रेणुभिर्यथाक्रममधूसरिता ललाटलम्बिशिरः केशपङ्क्तिः शिरः शाटकश्च ययोः ॥३९॥

**हैयङ्गवीनमादाय घोषवृद्धानुपागतान् ।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४०**

नवनीतं गृहीत्वा निकटप्राप्तान्गोनिवासस्थविरान्वनजातानां वृक्षाणां नामान्यनुयुञ्जन्तौ ॥ ४० ॥

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।**
**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४१**

महत्सु सरःसु पद्मानां सौरभं तरङ्गविमर्दशीतमात्मनिःश्वासतुल्यं शिङ्घन्तौ ॥ ४१ ॥

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ४२**

मनांस्यभिरमन्त आस्विति हृदयहारिणीः स्यन्दनचक्रप्रान्तशब्दे मेघध्वनिभ्रान्त्योद्ग्रीवैः स्त्रीपुंसरूपैर्मयूरैर्द्वाभ्यां प्रकाराभ्यां पृथक्कृताः षड्जाख्यस्वरसदृशत्वकारिणीर्मयूरवाणीराकर्णयन्तौ ॥ ४२ ॥

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४३**

अन्योन्यनेत्रसादृश्यं राजा राज्ञ्या मृगीसदृशदृक्त्वं पश्यति, सापि तस्य मृगसमेक्षणतामिति मृगमिथुनेष्वालोकयन्तौ । किञ्चिन्निकटपरित्यक्तमार्गेष्वहिंस्रत्वेन विश्वास्यत्वाद्रथासक्तदृक्षु ॥ ४३ ॥

**श्रेणिबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४४**

लक्ष्मणाख्यैः पक्षिभिरुद्ग्रीवीकृतमुखौ क्वचित्प्रेक्षाकौतुकात् । पङ्क्तिरचनात्खे स्तम्भरहितां बहिर्द्वारमालां विरचयद्भिः। यादृशी तोरणोपरि माला राज्ञां क्रियते तादृश्येव तैः पङ्क्तिः कृता । मधुरस्वनैः ॥ ४४ ॥

**ग्रामेष्वात्मनिसृष्टेषु यूपचिह्नेषु यज्वनाम् ।**
**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४५**

स्वयं दत्तेषु यज्ञपशुबन्धनकाष्ठाङ्कितेषु ग्रामेषु याजकानां द्विजानामर्घार्थादुदकादेः पश्चात्सफला आशिषो ऽभिनन्दन्तौ । अर्घेति पाठे अर्घः पूजा॥ अथाभ्यर्च्येत्याद्येकादशभिः कुलकम् ॥ ४५ ॥





**काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेशयोः।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६**

तयोर्गच्छतोरपूर्वावर्णनीया शोभाभूत् । विशदाकल्पयोः । यथा नीहारत्यक्तयोश्चित्राचन्द्रयोश्चैत्रपौर्णमास्यां शोभा रम्या भवति ॥ ४६ ॥

**तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७**

क्षितीश्वरो ऽतिक्रान्तं त्यक्तमपि मार्गं नाचेतयत । तत्तददृष्टपूर्वं भार्यायै दर्शयन् । रम्यचक्षुः रम्यो वाक्षिपातो यस्य रुच्यो वाकारो यस्य । सोमसुतसमः॥ ४७ ॥

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।**
**सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८**

स वसिष्ठस्य तपोवनमाससाद । अन्यैर्दुष्प्रापं यशो यस्य । श्रान्तरथ्यः। सन्ध्याभागे दिनान्ते। सन्ध्यादिनियमप्रवृत्तस्य शान्तस्य वा। सवधूकः॥ ४८॥

**वनान्तरादुपावृत्तैः स्कन्धासक्तसमित्कुशैः।**
**अग्निप्रत्युद्गमात्पूतैः पूर्यमाणं तपस्विभिः ॥ ४९**

मुनिभिर्भ्रियमाणं काननमध्यात्प्रत्यागतैः । अंसलग्ना इन्धनदर्भा येषां तैः। वह्निकृतं यदग्रनिर्याणं तेन पवित्रैः। आहिताग्नीनां ह्यग्नयः स्वयं प्रत्युद्गमं कुर्वन्तीति पौराणिकाः। अन्ये ऽत्रासमाश्वसन्त उपस्थानं परिचरणं प्रत्युद्गममाहुः ॥ ४९ ॥

**सेकान्ते मुनिकन्याभिर्विविक्तीकृतवृक्षकम् ।**
**आश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५०**

ऋषिदुहितृभिर्निर्जनीकृताः स्वल्पवृक्षा यत्र तम् । सेचनावसाने विस्रम्भार्थं पक्षिणाम् । सेकाधारो वृक्षाधःसेतुवलयं तज्जलं पिबन्ति ये तेषाम्॥ ५०॥

**आतपापायसङ्क्षिप्तनीवारासु निषादिभिः।**
**मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५१**

करङ्गैः प्रारब्धं भुक्तोद्गीर्णाहारचर्वणं यत्र । पर्णमठिकाजिरोर्वीषु विश्रान्तैः। सोष्मत्वात्तत्रावस्थानं मृगाणां सुखकारि। आतपस्य निवृत्त्यैकत्र ढौकिता नीवाराख्या धान्यविशेषा यासु ॥ ५१ ॥

अत्र पाठः

**आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः।**
**अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५२**

मृगैर्व्याप्तं नीवारांशसमवेतैः। एतदुटजद्वाररोधे कारणम्। अत एवापत्यतुल्यत्वम्। शिशुर्हि मातुरभ्यर्थितमन्नमुष्ट्यादिकमददत्या द्वारप्रवेशं रुणद्धि॥५२॥

**अभ्युद्धृताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।**
**पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः॥ ५३**

धूमैरध्वनीनांस्तपोवनोद्गीवान्पवित्रयन्तं धूमस्पर्शात्। प्रयत्नरक्षिताद्गार्हस्पत्यादुद्धृत्याहवनीयदक्षिणाग्न्योर्निजकुण्डक्षेपो ऽभ्युद्धरणं सन्धुक्षणमित्यर्थः। तादृशसंस्कारवतां वह्नीनां सूचकैः कथकैः। अकृते ह्यभ्युद्धारे ज्वलनाभावाद्धूमस्याप्यनुत्पत्तिः। दधिसर्पिर्यवागूनां गन्धो विद्यते येषां तैः। स दुष्प्रापेति षड्भिः कुलकम् ॥ ५३ ॥

**अथ यन्तारमादिश्य धुर्यान्विश्रमयेति सः।**
**तामवारोहयत्पत्नीं रथादवरुरोह च ॥ ५४**





अनन्तरं राजा सूतं तां भार्यां रथादवारोहयदिति द्विकर्मकत्वं स्वयमवारोपणे ऽनौचित्यात्। प्रकृतत्वात्सारथिमेवाश्वान्विगतक्लमान्कुर्वित्याज्ञाप्यावातरच्च॥ ५४ ॥

**तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः।**
**अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५**

राज्ञ ऋषयः पूजां विदधुर्यतः पूज्याय । ते ऽपि सभायां साधवो योग्या वाचारज्ञाः। सपत्नीकाय । संयततमानि श्रोत्रादीनि येषाम्, राज्ञीसन्निधेः। सन्ध्यादीनां षण्णां गुणानां यथावत्प्रयोगे नय एव नेत्रं यस्य ॥ ५५ ॥

**विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।**
**अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६**

राजा वसिष्ठमद्राक्षीत्। प्रादोषिकस्य होमादिकर्मणः समाप्तौ सेवितं स्वभार्यायारुन्धत्याख्ययाग्निमिव स्वाहाख्यया भार्यया सेवितम् ॥ ५६ ॥

**तयोर्जगृहतुः पादौ राजा राज्ञी च मागधी ।**
**तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७**

सुदक्षिणादिलीपावुभावरुन्धतीवसिष्ठयोश्चरणौ ववन्दाते। अरुन्धतीवसिष्ठौ चोभौ सुदक्षिणादिलीपौ स्नेहेनाशिषानुजगृहतुः ॥ ५७ ॥

**आतिथेयस्तमातिथ्यविनीताध्वपरिश्रमम् ।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः॥ ५८**

स ऋषी राजानं राज्यमेव तपोवनं तत्र ऋषिमिव राज्ये कल्याणं पृष्टवान्। अतिथिसाधुः पूजाकुशलः। अतिथ्यर्थं चरणक्षालनासनपुष्पादिदानमातिथ्यं तेन निवारितो मार्गखेदो यस्य ॥ ५८ ॥

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।**
**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः॥ ५९**

अनन्तरं राजा वसिष्ठस्याग्रे सत्यां गिरं जग्राह। अथर्वणि वेदे भवा अथर्वाणो मन्त्रविशेषास्तेषामाश्रयः। अथर्वा नाम ऋषिस्तेनोक्तमध्ययनं यत्तस्य वा स्थानम्। विजितानि शत्रुनगराणि येन। अभिधास्यमानतया मनसा व्यवसायो वाचो ग्रहणम्। गदतां प्रधानः॥ ५९ ॥

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।**
**दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम्॥ ६०**

तस्य मम कुशलमवश्यमेवोपपद्यते।

स्वाम्यमात्यश्च राष्ट्रं च कोशो दुर्गं बलं सुहृत्।
परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते ॥

देवकृता आपदो व्याधिदुर्भिक्षाद्या मानुषकृताः पुरोपरोधादिकास्तासां प्रतीकारकारी त्वं यस्य मे भवसि ॥ ६० ॥

**तव मन्त्रकृतो मन्त्रैर्दूरात्संयमितारिभिः।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥ ६१**

तव मन्त्रैर्ममाशुगाः स्वव्यापारात्प्रत्याख्यायन्त इव । अस्त्रमन्त्रप्रणेतुर्मन्त्रप्रकाशकस्य। यतो योजनशतादपि निवर्तितशत्रुभिः। शरास्तु लोचनगोचरगतशरव्यवेधिनः। इति पुरुषकृतापत्प्रतीकारलक्षणम् ॥ ६१ ॥

देवकृतायास्तु -

**हविरावर्जितं होतस्त्वया विधिवदग्निषु ।**
**वृष्टीभवति सस्यानामवग्रहविशोषिणाम् ॥ ६२**

142



हे पुरोधः त्वया वह्निषु होतव्यमन्नं विधानेन क्षिप्तं सत्सस्यानां वर्षतया सम्पद्यते। यदुक्तम्। अग्नौ प्रास्ताहुतिः सम्यगित्यादि। वर्षप्रतिबन्धेन विशुष्यन्ति ये तेषाम् ॥ ६२ ॥

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः।**
**यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम्॥ ६३**

वर्षशतायुष्काः। यदुक्तम्। शतायुर्वै पुरुषः। इति। व्याध्याद्युपद्रवरहिताः।

अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥

इति षडीतिवर्जिताः। यदेवंविधा मदीयाः प्रजास्तत्र कारणं त्वदीयं तपः स्वाध्यायानुष्ठानसम्भृतं तेजः॥ ६३ ॥

**तदेवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना।**
**सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः॥ ६४**

तस्मादित्थं भवता विरिञ्चितनयेन ज्ञानप्रभवेन वा कर्तव्येषु चिन्त्यमानस्य मम सम्पदो वर्धमाना विपदमिश्रिताः केन प्रकारेण न भवेयुः। अवश्यमेवैवंरूपा भवन्तीत्यर्थः॥ ६४ ॥

यद्येवं किमर्थमुद्विग्नो ऽसीत्याह -

**किं तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५**

यद्यप्येवं तथापि भूर्मां न प्रीणयति न मे प्रीतिं जनयति। एतस्यां स्नुषायामनीक्षितानुरूपसन्ततिम्। सारभूतानि वस्तूनि सृजन्त्यपि॥ ६५ ॥

**मत्परं दुर्लभं मत्वा नूनमावर्जितं मया।**
**पयः पूर्वे स्वनिःश्वासकदुष्णमुपभुञ्जते॥ ६६**

निश्चितं मया जलं दत्तमाद्याः पित्रादयः पितर आत्मनिःश्वासैरीषदुष्णं पिबन्ति। यतो मत्सकाशादन्यमुत्तरं दुष्प्रापं ज्ञात्वा। यद्वा अहं परः पर्यन्तोऽवधिर्यस्य पयसस्तत् ॥ ६६ ॥

**सो ऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।**
**प्रकाशश्चान्धकारश्च लोकालोक इवाचलः॥ ६७**

सोऽहं यागपूतस्वो ऽत एव प्रकाशो भवामि। सन्ततिविच्छेदेनाप्रकटो ऽतो ऽन्धकारो भवामि। यथा लोकालोकाख्यो ऽचलः सूर्याचन्द्रमसोरवधिभूतः प्रकाशश्चान्धकारश्च भवति। लोकालोकस्य हीहभागे रविस्तपति नापरत्र॥६७॥

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।**
**सन्ततिः शुद्धवंश्या तु परत्रेह च शर्मणे ॥ ६८**

नियमाज्ञपोपवासादेस्तथा दानाज्ञनितं पुण्यं परत्रोपकारि न त्विहापि। निर्मले पूर्वबान्धवप्रबन्धे भवः सन्तानस्तु परे लोके ऽस्मिन्नपि लोके श्रेयसे सुखाय दृष्टिसुखत्वात्स्वर्गहेतुत्वाच्च ॥ ६८ ॥

**तया हीनं विनेता मां कथं पश्यन्न दूयते ।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ६९**

सन्तत्या वर्जितं मामवलोकयन् गुरुः केन प्रकारेण न सन्तप्यते। प्रीत्यात्माना दत्तसेकं सन्तमफलमाश्रमाल्पवृक्षमिव ॥ ६९ ॥

**असह्यपीडं भगवन्नृणबन्धमवैहि मे ।**
**अरुन्तुदमिवालानं नवबद्धस्य दन्तिनः॥ ७०**

हे भगवन् । ऋणं पुत्रानुत्पत्तिलक्षणमेव बन्धं ऽशक्यव्यथं त्वं जानीहि। मर्मवेधकं बन्धनस्तम्भमिव नूतनबद्धस्य करिणः। जायमानो हि त्रिभिः





पुरुष ऋणैर्बद्धो भवति। तत्र ब्रह्मस्वाध्यायभ्यामृषीणामनृणो भवति, यागेन देवतानाम्, सन्तत्या पितृणाम् ॥ ७० ॥

**तस्माद्यथा विमुच्येयं संविधातुं तथार्हसि।**
**इक्ष्वाकूणां दुरापे ऽर्थे त्वदधीना हि सिद्धयः॥ ७१**

ऋणबन्धाद्येन प्रकारेणाहं विमुक्तो भवेयं तेन प्रकारेण कर्तुं योग्यो भवसि। यस्मादिक्ष्वाक्वपत्यानां दुर्लभे वस्तुनि तवायत्ताः सुप्राप्तवरूपाः सिद्धयः॥७१॥

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः॥ ७२**

स ऋषिरेवं राज्ञा विज्ञापितः प्रत्ययैकतानतया निश्चलनेत्रः क्षणमतिष्ठत्। अगाधजलो जलाशयो यथा क्षणं निद्रितमत्स्यस्तिष्ठति ॥ ७२ ॥

**सो ऽपश्यत्प्रणिधानेन सन्ततिस्तम्भकारणम् ।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७३**

मुनिर्भूपतेरपत्यप्रतिबन्धहेतुमवालोकयत्। इन्द्रियेभ्यो व्यावर्तितस्य मनस आत्मनैव सह संयोगेन। साक्षात्कृतो यथास्वरूपं लब्धः क्षेत्रज्ञो येन सः। अनन्तरं दिलीपं प्रतिबोधितवान् ॥ ७३ ॥

**पुरा शक्रमुपस्थाय तवोर्वीं प्रतियास्यतः।**
**आसीत्कल्पतरुच्छायासेविनी सुरभिः पथि ॥ ७४**

पूर्वं सुरभ्याख्या दाक्षायणी गौर्मार्गे ऽतिष्ठत् । तवेन्द्रं सेवित्वा भूमिं प्रतीपमेष्यतः कल्पवृक्षच्छायासेविनी ॥ ७४ ॥

**इमां देवीमृतुस्नातां स्मृत्वा सपदि सत्वरः।**
**प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनः॥ ७५**

सुरभेः क्रोधमुदपादयस्त्वमकृतप्रदक्षिणः सन्। पत्नीं ध्यात्वा नारीरजःकाले कृतस्नानां तत्क्षणमेव त्वरायुक्तः। तदा च त्वरा भवति, ऋतावुपेयादिति श्रुतेः। मा भूदृतुरस्या वन्ध्य इति ॥ ७५ ॥

**अवजानासि मां यस्मादतस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वा शशाप सा ॥ ७६**

सुरभिस्त्वेति शप्तवती । यस्मान्मामवधीरयसि तस्मात्कारणात्तव सन्ततिर्नोत्पत्स्यते मदीयां सन्ततिमसेवित्वा। यदा तु त्वया मदीया सन्ततिः सेविष्यते तदा तूत्पत्स्यते। अनाराध्येत्यन्तर्भावितण्यर्थः॥ ७६ ॥

कथं तदस्माभिर्न श्रुतमित्याह --

**स शापो न त्वया राजन्न च सारथिना श्रुतः।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७७**

हे नृप त्वया यन्त्रा वा स शापो न श्रुतः। येन प्रत्यायनं स्यात् । वियति त्रिस्रोतसः सम्बन्धिनि प्रवाहे शब्दायमाने। विशृङ्खला जलक्रीडार्थमागताः ककुप्करिणो यत्र तस्मिन् ॥ ७७ ॥

**अवैमि तदपध्यानाद्यत्नापेक्षं मनोरथम् ।**
**प्रतिबन्धाति हि श्रेयः पूज्यपूजाव्यतिक्रमः॥ ७८**

तस्मान्मनोराज्यं पुत्रोत्पत्तिलक्षणं प्रयत्ने सव्यापेक्षं नियमादिकापेक्षमवगच्छामि। तदीयात्कलुषदर्शनाद्धेतोरशुभेन चेतसा ध्यानात् । यस्मादर्च्यस्यार्चोल्लङ्घनं शुभतरं विघ्नयति ॥ ७५ ॥

सैव कथं नाराध्यत इत्याह --

**हविषे दीर्घसत्त्रस्य सा चेदानीं प्रचेतसः।**
**भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ७९**





सा च गौर्वरुणस्य हविरर्थं होतव्यं दातुं पातालमधिवसति। तेनेदानीं सा दुर्लभा । यज्ञान्ते प्राप्स्यते तर्हीत्याह वर्षसहस्रयाजनः क्रतुर्यस्य । तत्र यास्यामस्तर्हीत्याह सर्पैराच्छादितं द्वारं यत्र तत्। अतो दुष्प्रवेशम् ॥ ७९॥

किमधुना तर्हि कुर्म इत्याह --

**स त्वमेकान्तरां तस्या मदीयां वत्समातरम् ।**
**आराधय सपत्नीकः सा वां कामं प्रदास्यति ॥ ८०**

स त्वं शप्तः सुरभेरेकया सन्तत्या व्यवधानं यस्यास्तां तद्दौहित्रीं मद्गृहस्थां धेनुं सभार्यः प्रसादय। वत्सजननीमित्यक्रूरत्वं तस्या उक्तम् । तद्दौहित्री युवयोरभिलाषं करिष्यति ॥ ८० ॥

**इति वादिन एवास्य होतुराहुतिसाधनम् ।**
**अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८१**

अस्य वसिष्ठस्येत्थं ब्रुवत एव नन्दिन्याख्या धेनुः काननात्प्रत्याययौ । पुरोधस इज्योपकरणम्, न तु जीविकाहेतुः। अगर्ह्या प्रशस्ता ॥ ८१ ॥

कीदृशी सेत्याह --

**ताम्रा ललाटजां राजिं बिभ्रती सासितेतराम् ।**
**सन्ध्या प्रातिपदेनेव व्यतिभिन्ना हिमांशुना ॥ ८२**

वर्णेन कपिला कृष्णाया अन्यां शुक्लामलिकजातां लेखां दधाना । पार्वणेन चन्द्रेण विशेषिता पितृप्रसूर्यथा ॥ ८२ ॥

**भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि।**
**प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८३**

प्रस्नौतीति क्षीरं तेन भूमिं सिञ्चन्ती । किञ्चिदुष्णेन यज्ञान्तस्नानादपि पवित्रेण। तर्णकदर्शनोद्गतेन। कुण्डाकारं स्तनमण्डलं यस्याः।। ८३ ।।

**रजः कणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ।। ८४**

धूलिलवैश्चरणोत्पाटितैर्निकटाच्छरीरं कुषद्भिस्तीर्थस्नानतुल्यां पवित्रतामापादयन्ती । इतीत्यादि चक्कलकम् ।। ८४ ।।

**तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोधनः।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ।। ८५**

तां नन्दिनीं पवित्रालोकामालोक्य मुनिर्नृपं भूयो ऽवदत् । शुभाशुभफलचिह्नवेदी। सम्भाविता सफलमनोरथसम्पत्तिर्यस्य तम् ।। ८५ ।।

**अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः।**
**उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ।। ८६**

हे नृप तस्मान्निकटस्थां कार्यनिष्पत्तिं स्वस्य विशेषेण गणयावेहि । यस्मादियं नन्दिनी शुभाभिधान उक्त एव प्राप्ता ।। ८६ ।।

यन्तापेक्षमिति --

**वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।**
**विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ।। ८७**

वने साधु फलमूलादिकं तेन वर्तनं प्राणयात्रा यस्य स नित्यं स्वयमनुयायित्वेन नन्दिनीं धेनुमेतामाराधयितुं योग्यो भवसि। यथा विद्यां पुनः पुनरावर्तनेनाराधयितुं कश्चिद्योग्यो भवति ।। ८७ ।।

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थानमाचरेः।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः।। ८८**





नन्दिन्यां प्रयातायां गच्छेः। कृतगतिनिवृत्तावुत्थितायां गतिनिवृत्तिमुत्थानं कुर्याः। उपविष्टायामुपविश । उपयुक्तजलायां च जलमुपयुञ्जीथाः।। ८८।।

**वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।**
**प्रयातां प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ।। ८९**

मत्स्नुषा सुदक्षिणा च धेनुं तपोवनं यावत्तपोवनपर्यन्तं प्रभाते ऽनुगच्छतु । दिनान्ते तपोवनपर्यन्तं प्रत्युद्गच्छतु च। भक्तियुता। माल्यादिना पूजिताम् ॥८९॥

**इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।**
**अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ।। ९०**

अनेन प्रकारेण प्रसादावधि सेवानिष्ठस्त्वमेधि । विघ्नाभावस्तव भवतु । त्वज्जनको यथा भवता प्रशस्येन पुत्रेण प्रशस्यपुत्राणामग्रे ऽतिष्ठत्तथा त्वमासिसीष्ठाः। अविघ्नमित्यर्थाभावे ऽव्ययीभावः। तत्पुरुषे नपुंसकता दुर्लभा स्यात् ।। ९० ।।

**तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः।**
**आदेशं देशकालज्ञः शिष्यः शासितुरानतः।। ९१**

शासनीयो राजा गुरोराज्ञामेवमस्त्वित्यङ्गीचकार। तुष्टः सभार्यः। यत इदमधुनोचितमिति वेत्ति । प्रणतः।। ९१ ।।

**अथ प्रदोषे दोषज्ञः संवेशाय विशां पतिम् ।**
**सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ।। ९२**

अनन्तरं ब्रह्मपुत्रो वशिष्ठः प्रजानां प्रभुं राजानं स्वापार्थं व्यसर्जयत्। रात्रिमुखे । दूषणवित्पण्डितः। प्रिया सत्या वाणी यस्य सः। अदीना लक्ष्मीर्यस्य तम्॥ ९२ ।।

**सत्यामपि तपः सिद्धौ नियमापेक्षया मुनिः।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम्॥ ९३**

नृपस्य वनसाधुमेव तृणशय्यापरिकरसम्पत्तिमकारयत्। कदाचित्तदेव सम्भवेदित्याह - तपोमाहात्म्ये विद्यमाने ऽपि। किं राजोचितां सामग्रीं नाकल्पयदित्याह - व्रतपारतन्त्र्येण। यतो विधिज्ञः। व्रतिनो वन्यमेव संविधानं योग्यमिति ॥ ९३ ॥

**निर्दिष्टां कुलपतिना स पर्णशालाम्**
**अध्यास्य प्रयतपरिग्रहद्वितीयः।**
**तच्छिष्याध्ययननिवेदितावसानां**
**संविष्टः कुशशयने निशां निनाय॥ ९४**

राजा रात्रिमत्यवाहयत्। आश्रमगुरुणा वसिष्ठेन निरूपितां कथितां पर्णमठिकामधिष्ठाय। सनियमा भार्या सहाया यस्य सः। गुरुवटूनां पठनेन सूचिता समाप्तिर्यस्यास्ताम्। वटवो ह्युत्थाय निशान्ते पठितुं प्रक्रमन्ते। दर्भशय्यायां सुप्तः। प्रहर्षिणी वृत्तम् ॥ ९४ ॥

इति रघुवंशे महाकाव्ये सटीके प्रथमः सर्गः॥ १ ॥







హృదయోల్లాసమును అందించిన
డా॥ వుయ్యూరు లక్ష్మీనరసింహారావుగార్కి,
ప్రోత్సహించిన శ్రీ దేశం పాపిరెడ్డిగారికి నమస్సులు.
**ఎందరో మహానుభావులు, అందరికీ వందనాలు.**

- రామోరా

అనుబంధము -1 రఘువంశః ప్రథమఃసర్గః

## శ్లోకానుక్రమణికా









---

అనుబంధము -2

రఘువంశః - ప్రథమః సర్గః

**పదసూచీ** (పదమ్ - శ్లోకభాగః)







శ్రీః

అనుబంధము -3

రఘువంశః - ప్రథమః సర్గః

## లోకోక్తులు







అనుబంధం-4

## ఉపయుక్తగ్రన్థసూచీ


1) మేఘదూతమ్ - మృణాళినీ వ్యాఖ్య
2) కుమారసమ్భవమ్ - పుంసవనీ వ్యాఖ్య
3) కుమారసమ్భవనమ్ - ప్రకాశికా మరియు వివరణం వ్యాఖ్య
4) అష్టాధ్యాయీ సూత్రపాఠః - ప్రహ్లాద టిప్పణి - కృష్ణదాస్ అకాడమి - 2001.
5) Practical Sanskrit - English Dictionary - 3 Volumes - Apte.
6) హలాయుధ కోశః - ఉత్తరప్రదేశ్ హిందీసంస్థాన్ - 1993.
7) ఉణాదికోశః - యుధిష్ఠరమీమాంసకః - 2000
8) సంస్కృతధాతుసాగరతరణిః - మద్రాస్ పబ్లికేషన్.
9) అభిదానచిన్తామణిః - చౌఖాంబా - 1996
10) అమరకోశమ్ - గురుబాలప్రబోధికా - వావిళ్ళ ప్రచురణ.
11) అవ్యయకోశః - The Sanskrit Educational Society, Madras - 1971
12) సంకేతపదకోశము - డా॥ రవ్వా శ్రీహరి - పతంజలి పబ్లికేషన్స్ - 2002.
13) బృహద్ధాతుకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
14) బృహచ్ఛబ్దకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
15) సంస్కృతవ్యాకరణమ్ - శ్రీ ఆర్.వి.ఆర్.కె. శాస్త్రి - కృష్ణానందమఠం - 1997
16) పుష్పబాణవిలాసః - వేదం వారి ప్రచురణ - 1931
17) అమరుకావ్యమ్ - వేదం వారి ప్రచురణ - 1931
18) మనుస్మృతి - పరిమళ ప్రచురణ - 2004
19) తర్కశాస్త్రం - వ్యాఖ్యాత - డా॥ రామానుజాచార్య - 1991
20) భర్తృహరి సుభాషితములు - వావిళ్ళ ప్రచురణ.
21) యోగదర్శనమ్ - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
22) శ్రీమద్రామాయణం - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
23) ఋతుసంహారః - మృణాళినీ వ్యాఖ్య - రామోరా - 2004
24) రఘువంశమ్ - వావిళ్ళ ప్రచురణ - 1926.
25) రఘువంశమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2004.
26) కుమారసంభవమ్ - వేదం వారి ప్రచురణ - 1943
27) కుమారసంభవమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2003.
28) ఘటకర్పరకావ్యమ్ - మఞ్జరీ వ్యాఖ్య - రామోరా, దుర్గానంద - 2003.

29) శిశుపాలవధమ్ - కృష్ణదాస్ అకాడమి - 1998
30) మాఘకావ్యమ్ - వావిళ్ళ ప్రచురణ - 1967
31) కావ్యాదర్శః - బాలానందినీవ్యాఖ్యా
32) కావ్యాదర్శః - చౌఖాంబా - 2001
33) ఏకావళి - మాధవీయ వివృతి - అభినవభారతి ప్రచురణ - గుంటూరు.
34) కావ్యప్రకాశము - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
35) ప్రతారుద్రీయయశోభూషణమ్ - వావిళ్ళ ప్రచురణ - 1965
36) సాహిత్యదర్పణమ్ - కృష్ణదాస్ అకాడమి - 2005
37) దశరూపకమ్ - చౌఖాంబా - 1987
38) ధ్వన్యాలోకమ్ - బాలానందినీవ్యాఖ్యా - శ్రీజయలక్ష్మీ పబ్లికేషన్స్ - 1998
39) రఘువంశమ్ - నన్దార్గికర్
40) భగవద్గీత - గీతాప్రెస్.
41) శ్రీమద్భాగవత మహాపురాణమ్ - గీతాప్రెస్.
42) నైషధీయచరితమ్ - నారాయణీయమ్ వ్యాఖ్యా.
43) నైషధీయచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి ప్రచురణ.
44) A Classical Dictionary of Hindu Mythology and Religion - J. Dowson.
45) The Kiratarjuneeyam of Bharavi - M.R. Kale. - Banarsidas Pub.
46) దశకుమారచరితమ్-1 - వేదంవారి ప్రచురణ - 1994
47) సూర్యశతకము - బాలప్రభ - డా॥ తాళ్ళూరి - 1990
48) ప్రసన్నరాఘవమ్ - చౌఖాంబా - 1972
49) సిద్ధాంతకౌముదీ - నిర్ణయ్‌సాగర్ ప్రెస్ - 1929.
50) అష్టాధ్యాయీ పదానుక్రమకోశః - పరిమళ పబ్లికేషన్స్ - 1996.
51) గీతగోవిందకావ్యము - వావిళ్ళ ప్రచురణ - 1993
52) కిరాతార్జునీయమ్-1 - శ్రీ పరమేశ్వర పబ్లికేషన్స్.
53) కిరాతార్జునీయమ్-3 - సంస్కృతభాషా ప్రచార సమితి.
54) భామినీవిలాసః - సురభారతీ ప్రకాశమ్ - 2000
55) విక్రమోర్వశీయమ్ - సంస్కృత అకాడమి - ఓ.యు., హైదరాబాద్.
56) విక్రమోర్వశీయమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
57) మాళవికాగ్నిమిత్రమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
58) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002





59) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ నోరి భోగీశ్వరశర్మ - 2002
60) నాగానందమ్ - శిరోమణివ్యాఖ్య - తెలుగు విశ్వవిద్యాలయం - 2001.
61) ఉత్తరరామచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1965
62) ఉత్తరరామచరితమ్ - చౌఖాంబా - 2003
63) మాలతీమాధవమ్ - యం.ఆర్. కాలే - బనారసీదాస్ - 1997.
64) మృచ్ఛకటికమ్ - డా॥ బేతవోలు రామబ్రహ్మం - 2005.
65) ముద్రారాక్షసమ్ - ఆర్.డి. కర్మార్కర్ - చౌఖాంబా.
66) ముద్రారాక్షసమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి,
67) వేణీసంహారమ్ - డా॥ బేతవోలు రామబ్రహ్మం-తెలుగు విశ్వవిద్యాలయం - 1988
68) కావ్యాలంకారః - భామహవిరచితః - బా.వ్యా.-సంస్కృతభాషాప్రచారసమితి- 2004
69) సరస్వతీకంఠాభరణమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1984
70) నీతిసారః - కామందకః
71) పాణినివిరచితాఅష్టాధ్యాయీ - 2 భాగములు - చౌఖాంబా - 2004.
72) పంచతంత్రం-1 & 2 - సంస్కృతభాషాప్రచారసమితి - 1988.
73) హితోపదేశమ్ - సంస్కృతభాషాప్రచారసమితి
74) శ్రీ విష్ణుసహస్రనామస్తోత్రమ్ - ఆంధ్రానువాదము - శ్రీ న.చ.రఘునాథాచార్యులు.
75) బృహత్స్తోత్రరత్నాకరః - వావిళ్ళ ప్రచురణ.
76) సర్వశబ్దః - ఏ.యి.యస్. పబ్లికేషన్ - 2004
77) శబ్దసాగర్ - చౌఖాంబా - 2004
78) రసగంగాధరమ్ - (అనువాదము) ధరణికోట వెంకటసుబ్బయ్య.
79) లఘుసిద్ధాంతకౌముదీ - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
80) అమరుకకావ్యమ్ - మనసిజవ్యాఖ్య - సాధన గ్రంథ మండలి, తెనాలి.
81) కిరాతార్జునీయమ్ - వావిళ్ళ ప్రచురణ.
82) రఘువంశమ్ - కర్మార్కర్
83) చమత్కారచంద్రిక - ఆంధ్రవిశ్వవిద్యాలయ ప్రచురణ, వాల్టేర్ - 1969
84) శ్రీమహాభారతమ్ - వావిళ్ళ ప్రతి - 1931
85) శ్రీకాలిదాసకవితావైభవము
86) శబ్దకల్పద్రుమః।
87) రఘువంశః (I - VI) Spain Publications
88) రఘువంశమ్ - S. Pandit, Principal, D.C.

- - -